श्रीमेधादक्षिणामूर्तिसहस्रनामावलिः १

श्रीः

अस्य श्री मेधादक्षिणामूर्तिसहस्रनामस्तोत्रस्य
ब्रह्मा ऋषिः । गायत्री छन्दः । दक्षिणामूर्तिर्देवता ।
ओं बीजम् । स्वाहा शक्तिः । नमः कीलकम् ।
मेधादक्षिणामूर्तिप्रसादसिद्ध्यर्थे जपे विनियोगः ।
ह्राम् इत्यादिना अङ्गन्यासः ।

ध्यानम् ।

सिद्धितोयनिधेर्मध्ये रत्नग्रीवे मनोरमे ।
कदम्बवनिकामध्ये श्रीमद्वटतरोरधः ॥ १॥

आसीनमाद्यं पुरुषमादिमध्यान्तवर्जितम् ।
शुद्धस्फटिकगोक्षीरशरत्पूर्णेन्दुशेखरम् ॥ २॥

दक्षिणे चाक्षमालां च वह्निं वै वामहस्तके ।
जटामण्डलसंलग्नशीताम्शुकरमण्डितम् ॥ ३॥

नागहारधरं चारुकङ्कणैः कटिसूत्रकैः ।
विराजमानवृषभं व्याघ्रचर्माम्बरावृतम् ॥ ४॥

चिन्तामणिमहाबृन्दैः कल्पकैः कामधेनुभिः ।
चतुष्षष्टिकलाविद्यामूर्तिभिः श्रुतिमस्तकैः ॥ ५॥

रत्नसिंहासने साधुद्वीपिचर्मसमायुतम् ।
तत्राष्टदलपद्मस्य कर्णिकायां सुशोभने ॥ ६॥

वीरासने समासीनं लम्बदक्षपदांबुजम् ।
ज्ञानमुद्रां पुस्तकं च वराभीतिधरं हरम् ॥ ७॥

पादमूलसमाक्रान्तमहापस्मारवैभवम् ।
रुद्राक्षमालाभरणभूषितं भूतिभासुरम् ॥ ८॥

गजचर्मोत्तरीयं च मन्दस्मितमुखाम्बुजम् ।
सिद्धबृन्दैर्योगिबृन्दैर्मुनिबृन्दैर्निषेवितम् ॥ ९॥

आराध्यमानवृषभं अग्नीन्दुरविलोचनम् ।
पूरयन्तं कृपादृष्ट्या पुमर्थानाश्रिते जने ॥ १०॥

एवं विभावयेदीशं सर्वविद्याकलानिधिम् ॥ ११॥

लं इत्यादिना पञ्चोपचाराः ॥

॥ श्री गुरुभ्यो नमः ।

अथ श्रीमेधादक्षिणामूर्तिसहस्रनामावलिः ।

ॐ नाम्ने नमः ।

१ ॐ देवदेवाय नमः ।
२ ॐ महादेवाय नमः ।
३ ॐ देवानामपि देशिकाय नमः ।
४ ॐ दक्षिणामूर्तये नमः ।
५ ॐ ईशानाय नमः ।
६ ॐ दयापूरितदिङ्मुखाय नमः । ।१।
७ ॐ कैलासशिखरोत्तुङ्गकमनीयनिजाकृतये नमः ।
८ ॐ वटद्रुमतटीदिव्यकनकासनसंस्थिताय नमः । ।२।
९ ॐ कटीतटपटीभूतकरिचर्मोज्ज्वलाकृतये नमः ।
१० ॐ पाटीरपाण्डुराकारपरिपूर्णसुधाधिपाय नमः । ।३।
११ ॐ जटाकोटीरघटितसुधाकरसुधाप्लुताय नमः ।
१२ ॐ पश्यल्ललाटसुभगसुन्दरभ्रूविलासवते नमः । ।४।
१३ ॐ कटाक्षसरणीनिर्यत्करुणापूर्णलोचनाय नमः ।
१४ ॐ कर्णालोलतटिद्वर्णकुण्डलोज्ज्वलगण्डभुवे नमः । ।५।
१५ ॐ तिलप्रसूनसंकाशनासिकापुरभासुराय नमः ।
१६ ॐ मन्दस्मितस्फुरन्मुग्धमहनीयमुखांबुजाय नमः । ।६।
१७ ॐ कुन्दकुड्मलसंस्फर्धिदन्तपङ्क्तिविराजिताय नमः ।
१८ ॐ सिन्दूरारुणसुस्निग्धकोमलाधरपल्लवाय नमः । ।७।
१९ ॐ शङ्खाटोपगलद्दिव्यगळवैभवमञ्जुलाय नमः ।
२० ॐ करकन्दलितज्ञानमुद्रारुद्राक्षमालिकाय नमः । ।८।
२१ ॐ अन्यहस्ततलन्यस्तवीणापुस्तोल्लसद्वपुषे नमः ।
२२ ॐ विशालरुचिरोरस्कबलिमत्पल्लवोदराय नमः । ।९।
२३ ॐ बृहत्कटिनितंबाढ्याय नमः ।
२४ ॐ पीवरोरुद्वयान्विताय नमः ।
२५ ॐ जङ्घाविजिततूणीराय नमः ।
२६ ॐ तुङ्गगुल्फयुगोज्ज्वलाय नमः । ।१०।
२७ ॐ मृदुपाटलपादाब्जाय नमः ।
२८ ॐ चन्द्राभनखदीधितये नमः ।
२९ ॐ अपसव्योरुविन्यस्तसव्यपादसरोरुहाय नमः । ।११।
३० ॐ घोरापस्मारनिक्षिप्तधीरदक्षपदाम्बुजाय नमः ।
३१ ॐ सनकादिमुनिध्येयाय नमः ।

३२ ॐ सर्वाभरणभूषिताय नमः । ।१२।
३३ ॐ दिव्यचन्दनलिप्ताङ्गाय नमः ।
३४ ॐ चारुहासपरिष्कृताय नमः ।
३५ ॐ कर्पूरधवलाकाराय नमः ।
३६ ॐ कन्दर्पशतसुन्दराय नमः । ।१३।
३७ ॐ कात्यायनीप्रेमनिधये नमः ।
३८ ॐ करुणारसवारिधये नमः ।
३९ ॐ कामितार्थप्रदाय नमः ।
४० ॐ श्रीमत्कमलावल्लभप्रियाय नमः । ।१४।
४१ ॐ कटाक्षितात्मविज्ञानाय नमः ।
४२ ॐ कैवल्यानन्दकन्दलाय नमः ।
४३ ॐ मन्दहाससमानेन्दवे नमः ।
४४ ॐ छिन्नाज्ञानतमस्ततये नमः । ।१५।
४५ ॐ संसारानलसंतप्तजनतामृतसागराय नमः ।
४६ ॐ गंभीरहृदयाम्भोजनभोमणिनिभाकृतये नमः । ।१६।
४७ ॐ निशाकरकराकारवशीकृतजगत्त्रयाय नमः ।
४८ ॐ तापसाराध्यपादाब्जाय नमः ।
४९ ॐ तरुणानन्दविग्रहाय नमः । ।१७।
५० ॐ भूतिभूषितसर्वाङ्गाय नमः ।
५१ ॐ भूताधिपतये नमः ।
५२ ॐ ईश्वराय नमः ।
५३ ॐ वदनेन्दुस्मितज्योत्स्नानिलीनत्रिपुराकृतये नमः । ।१८।
५४ ॐ तापत्रयतमोभानवे नमः ।
५५ ॐ पापारण्यदवानलाय नमः ।
५६ ॐ संसारसागरोद्धर्त्रे नमः ।
५७ ॐ हंसाग्र्योपास्यविग्रहाय नमः । ।१९।
५८ ॐ ललाटहुतभुग्दग्धमनोभवशुभाकृतये नमः ।
५९ ॐ तुच्छीकृतजगज्जालाय नमः ।
६० ॐ तुषारकरशीतलाय नमः । ।२०।
६१ ॐ अस्तंगतसमस्तेछाय नमः ।
६२ ॐ निस्तुलानन्दमन्थराय नमः ।
६३ ॐ धीरोदात्तगुणाधाराय नमः ।
६४ ॐ उदारवरवैभवाय नमः । ।२१।
६५ ॐ अपारकरुणामूर्तये नमः ।
६६ ॐ अज्ञानध्वान्तभास्कराय नमः ।
६७ ॐ भक्तमानसहंसाग्र्याय नमः ।
६८ ॐ भवामयभिषक्तमाय नमः । ।२२।
६९ ॐ योगीन्द्रपूज्यपादाब्जाय नमः ।

७० ॐ योगपट्टोल्लसत्कटये नमः ।
७१ ॐ शुद्धस्फटिकसङ्काशाय नमः ।
७२ ॐ बद्धपन्नगभूषणाय नमः । ।२३।
७३ ॐ नानामुनिसमाकीर्णाय नमः ।
७४ ॐ नासाग्रन्यस्तलोचनाय नमः ।
७५ ॐ वेदमूर्धैकसंवेद्याय नमः ।
७६ ॐ नादध्यानपरायणाय नमः । ।२४।
७७ ॐ धराधरेन्दवे नमः ।
७८ ॐ आनन्दसंदोहरससागराय नमः ।
७९ ॐ द्वैतबृन्दविमोहान्ध्यपराकृतदृगद्भुताय नमः । ।२५।
८० ॐ प्रत्यगात्मने नमः ।
८१ ॐ परस्मै ज्योतिषे नमः ।
८२ ॐ पुराणाय नमः ।
८३ ॐ परमेश्वराय नमः ।
८४ ॐ प्रपञ्चोपशमाय नमः ।
८५ ॐ प्राज्ञाय नमः ।
८६ ॐ पुण्यकीर्तये नमः ।
८७ ॐ पुरातनाय नमः । ।२६।
८८ ॐ सर्वाधिष्ठानसन्मात्राय नमः ।
८९ ॐ स्वात्मबन्धहराय नमः ।
९० ॐ हराय नमः ।
९१ ॐ सर्वप्रेमनिजाहासाय नमः ।
९२ ॐ सर्वानुग्रहकृते नमः ।
९३ ॐ शिवाय नमः । ।२७।
९४ ॐ सर्वेन्द्रियगुणाभासाय नमः ।
९५ ॐ सर्वभूतगुणाश्रयाय नमः ।
९६ ॐ सच्चिदानन्दपूर्णात्मने नमः ।
९७ ॐ स्वे महिम्नि प्रतिष्ठिताय नमः । ।२८।
९८ ॐ सर्वभूतान्तराय नमः ।
९९ ॐ साक्षिणे नमः ।
१०० ॐ सर्वज्ञाय नमः ।
१०१ ॐ सर्वकामदाय नमः ।
१०२ ॐ सनकादिमहायोगिसमाराधितपादुकाय नमः । ।२९।
१०३ ॐ आदिदेवाय नमः ।
१०४ ॐ दयासिन्धवे नमः ।
१०५ ॐ शिक्षितासुरविग्रहाय नमः ।
१०६ ॐ यक्षकिन्नरगन्धर्वस्तूयमानात्मवैभवाय नमः । ।३०।
१०७ ॐ ब्रह्मादिदेवविनुताय नमः ।

१०८ ॐ योगमायानियोजकाय नमः ।
१०९ ॐ शिवयोगिने नमः ।
११० ॐ शिवानन्दाय नमः ।
१११ ॐ शिवभक्तसमुद्धराय नमः । ।३१।
११२ ॐ वेदान्तसारसन्दोहाय नमः ।
११३ ॐ सर्वसत्त्वावलंबनाय नमः ।
११४ ॐ वटमूलाश्रयाय नमः ।
११५ ॐ वाग्मिने नमः ।
११६ ॐ मान्याय नमः ।
११७ ॐ मलयजप्रियाय नमः । ।३२।
११८ ॐ सुशीलाय नमः ।
११९ ॐ वाञ्छितार्थज्ञाय नमः ।
१२० ॐ प्रसन्नवदनेक्षणाय नमः ।
१२१ ॐ नृत्तगीतकलाभिज्ञाय नमः ।
१२२ ॐ कर्मविदे नमः ।
१२३ ॐ कर्ममोचकाय नमः । ।३३।
१२४ ॐ कर्मसाक्षिणे नमः ।
१२५ ॐ कर्ममयाय नमः ।
१२६ ॐ कर्मणां फलप्रदाय नमः ।
१२७ ॐ ज्ञानदात्रे नमः ।
१२८ ॐ सदाचाराय नमः ।
१२९ ॐ सर्वोपद्रवमोचकाय नमः । ।३४।
१३० ॐ अनाथनाथाय नमः ।
१३१ ॐ भगवते नमः ।
१३२ ॐ आश्रितामरपादपाय नमः ।
१३३ ॐ वरप्रदाय नमः ।
१३४ ॐ प्रकाशात्मने नमः ।
१३५ ॐ सर्वभूतहिते रताय नमः । ।३५।
१३६ ॐ व्याघ्रचर्मासनासीनाय नमः ।
१३७ ॐ आदिकर्त्रे नमः ।
१३८ ॐ महेश्वराय नमः ।
१३९ ॐ सुविक्रमाय नमः ।
१४० ॐ सर्वगताय नमः ।
१४१ ॐ विशिष्टजनवत्सलाय नमः । ।३६।
१४२ ॐ चिन्ताशोकप्रशमनाय नमः ।
१४३ ॐ जगदानन्दकारकाय नमः ।
१४४ ॐ रश्मिमते नमः ।
१४५ ॐ भुवनेशाय नमः ।

१४६  ॐ देवासुरपूजिताय नमः ।    ।३७।
१४७  ॐ मृत्युञ्जयाय नमः ।
१४८  ॐ व्योमकेशाय नमः ।
१४९  ॐ षट्त्रिंशत्तत्त्वसङ्ग्रहाय नमः ।
१५०  ॐ अज्ञातसंभवाय नमः ।
१५१  ॐ भिक्षवे नमः ।
१५२  ॐ अद्वितीयाय नमः ।
१५३  ॐ दिगंबराय नमः ।    ।३८।
१५४  ॐ समस्तदेवतामूर्तये नमः ।
१५५  ॐ सोमसूर्याग्निलोचनाय नमः ।
१५६  ॐ सर्वसाम्राज्यनिपुणाय नमः ।
१५७  ॐ धर्ममार्गप्रवर्तकाय नमः ।    ।३९।
१५८  ॐ विश्वाधिकाय नमः ।
१५९  ॐ पशुपतये नमः ।
१६०  ॐ पशुपाशविमोचकाय नमः ।
१६१  ॐ अष्टमूर्तये नमः ।
१६२  ॐ दीप्तमूर्तये नमः ।
१६३  ॐ नामोच्चारणमुक्तिदाय नमः ।    ।४०।
१६४  ॐ सहस्रादित्यसंकाशाय नमः ।
१६५  ॐ सदाषोडशवार्षिकाय नमः ।
१६६  ॐ दिव्यकेलीसमायुक्ताय नमः ।
१६७  ॐ दिव्यमाल्याम्बरावृताय नमः ।    ।४१।
१६८  ॐ अनर्घरत्नसम्पूर्णाय नमः ।
१६९  ॐ मल्लिकाकुसुमप्रियाय नमः ।
१७०  ॐ तप्तचामीकराकाराय नमः ।
१७१  ॐ जितदावानलाकृतये नमः ।    ।४२।
१७२  ॐ निरञ्जनाय नमः ।
१७३  ॐ निर्विकाराय नमः ।
१७४  ॐ निजावासाय नमः ।
१७५  ॐ निराकृतये नमः ।
१७६  ॐ जगद्गुरवे नमः ।
१७७  ॐ जगत्कर्त्रे नमः ।
१७८  ॐ जगदीशाय नमः ।
१७९  ॐ जगत्पतये नमः ।    ।४३।
१८०  ॐ कामहन्त्रे नमः ।
१८१  ॐ काममूर्तये नमः ।
१८२  ॐ कल्याणवृषवाहनाय नमः ।
१८३  ॐ गङ्गाधराय नमः ।

१८४ ॐ महादेवाय नमः ।
१८५ ॐ दीनबन्धविमोचकाय नमः । ।४४।
१८६ ॐ धूर्जतये नमः ।
१८७ ॐ खण्डपरशवे नमः ।
१८८ ॐ सद्गुणाय नमः ।
१८९ ॐ गिरिजासखाय नमः ।
१९० ॐ अव्ययाय नमः ।
१९१ ॐ भूतसेनेशाय नमः ।
१९२ ॐ पापघ्नाय नमः ।
१९३ ॐ पुण्यदायकाय नमः । ।४५।
१९४ ॐ उपदेष्ट्रे नमः ।
१९५ ॐ दृढप्रज्ञाय नमः ।
१९६ ॐ रुद्राय नमः ।
१९७ ॐ रोगविनाशनाय नमः ।
१९८ ॐ नित्यानन्दाय नमः ।
१९९ ॐ निराधाराय नमः ।
२०० ॐ हराय नमः ।
२०१ ॐ देवशिखामणये नमः । ।४६।
२०२ ॐ प्रणतार्तिहराय नमः ।
२०३ ॐ सोमाय नमः ।
२०४ ॐ सान्द्रानन्दाय नमः ।
२०५ ॐ महामतये नमः ।
२०६ ॐ आश्चर्यवैभवाय नमः ।
२०७ ॐ देवाय नमः ।
२०८ ॐ संसारार्णवतारकाय नमः । ।४७।
२०९ ॐ यज्ञेशाय नमः ।
२१० ॐ राजराजेशाय नमः ।
२११ ॐ भस्मरुद्राक्षलाञ्छनाय नमः ।
२१२ ॐ अनन्ताय नमः ।
२१३ ॐ तारकाय नमः ।
२१४ ॐ स्थाणवे नमः ।
२१५ ॐ सर्वविद्येश्वराय नमः ।
२१६ ॐ हरये नमः । ।४८।
२१७ ॐ विश्वरूपाय नमः ।
२१८ ॐ विरूपाक्षाय नमः ।
२१९ ॐ प्रभवे नमः ।
२२० ॐ परिबृडाय नमः ।
२२१ ॐ दृढाय नमः ।

२२२ ॐ भव्याय नमः ।
२२३ ॐ जितारिषड्वर्गाय नमः ।
२२४ ॐ महोदाराय नमः ।
२२५ ॐ विषाशनाय नमः । ।४९।
२२६ ॐ सुकीर्तये नमः ।
२२७ ॐ आदिपुरुषाय नमः ।
२२८ ॐ जरामरणवर्जिताय नमः ।
२२९ ॐ प्रमाणभूताय नमः ।
२३० ॐ दुर्ज्ञेयाय नमः ।
२३१ ॐ पुण्याय नमः ।
२३२ ॐ परपुरञ्जयाय नमः । ।५०।
२३३ ॐ गुणाकराय नमः ।
२३४ ॐ गुणश्रेष्ठाय नमः ।
२३५ ॐ सच्चिदानन्दविग्रहाय नमः ।
२३६ ॐ सुखदाय नमः ।
२३७ ॐ कारणाय नमः ।
२३८ ॐ कर्त्रे नमः ।
२३९ ॐ भवबन्धविमोचकाय नमः । ।५१।
२४० ॐ अनिर्विण्णाय नमः ।
२४१ ॐ गुणग्राहिणे नमः ।
२४२ ॐ निष्कलङ्काय नमः ।
२४३ ॐ कलङ्कघ्ने नमः ।
२४४ ॐ पुरुषाय नमः ।
२४५ ॐ शाश्वताय नमः ।
२४६ ॐ योगिने नमः ।
२४७ ॐ व्यक्ताव्यक्ताय नमः ।
२४८ ॐ सनातनाय नमः । ।५२।
२४९ ॐ चराचरात्मने नमः ।
२५० ॐ सूक्ष्मात्मने नमः ।
२५१ ॐ विश्वकर्मणे नमः ।
२५२ ॐ तमोऽपहृते नमः ।
२५३ ॐ भुजङ्गभूषणाय नमः ।
२५४ ॐ भर्गाय नमः ।
२५५ ॐ तरुणाय नमः ।
२५६ ॐ करुणालयाय नमः । ।५३।
२५७ ॐ अणिमादिगुणोपेताय नमः ।
२५८ ॐ लोकवश्यविधायकाय नमः ।
२५९ ॐ योगपट्टधराय नमः ।

२६० ॐ मुक्ताय नमः ।
२६१ ॐ मुक्तानं परमायै गतये नमः । ।५४।
२६२ ॐ गुरुरूपधराय नमः ।
२६३ ॐ श्रीमत्परमानन्दसागराय नमः ।
२६४ ॐ सहस्रबाहवे नमः ।
२६५ ॐ सर्वेशाय नमः ।
२६६ ॐ सहस्रावयवान्विताय नमः । ।५५।
२६७ ॐ सहस्रमूर्ध्ने नमः ।
२६८ ॐ सर्वात्मने नमः ।
२६९ ॐ सहस्राक्षाय नमः ।
२७० ॐ सहस्रपदे नमः ।
२७१ ॐ निराभासाय नमः ।
२७२ ॐ सुक्ष्मतनवे नमः ।
२७३ ॐ हृदि ज्ञाताय नमः ।
२७४ ॐ परात्पराय नमः । ।५६।
२७५ ॐ सर्वात्मगाय नमः ।
२७६ ॐ सर्वसाक्षिणे नमः ।
२७७ ॐ निःसङ्गाय नमः ।
२७८ ॐ निरुपद्रवाय नमः ।
२७९ ॐ निष्कलाय नमः ।
२८० ॐ सकलाध्यक्षाय नमः ।
२८१ ॐ चिन्मयाय नमः ।
२८२ ॐ तमसः पराय नमः । ।५७।
२८३ ॐ ज्ञानवैराग्यसम्पन्नाय नमः ।
२८४ ॐ योगानन्दमयाय शिवाय नमः ।
२८५ ॐ शाश्वतैश्वर्यसम्पूर्णाय नमः ।
२८६ ॐ महायोगीश्वरेश्वराय नमः । ।५८।
२८७ ॐ सहस्रशक्तिसंयुक्ताय नमः ।
२८८ ॐ पुण्यकायाय नमः ।
२८९ ॐ दुरासदाय नमः ।
२९० ॐ तारकब्रह्मसम्पूर्णाय नमः ।
२०१ ॐ तपस्विजनसंवृताय नमः । ।५९।
२९२ ॐ विधीन्द्रामरसम्पूज्याय नमः ।
२९३ ॐ ज्योतिषां ज्योतिषे नमः ।
२९४ ॐ उत्तमाय नमः ।
२९५ ॐ निरक्षराय नमः ।
२९६ ॐ निरालम्बाय नमः ।
२९७ ॐ स्वात्मारामाय नमः ।

२९८ ॐ विकर्तनाय नमः । । ६०।
२९९ ॐ निरवद्याय नमः ।
३०० ॐ निरातङ्काय नमः ।
३०१ ॐ भीमाय नमः ।
३०२ ॐ भीमपराक्रमाय नमः ।
३०३ ॐ वीरभद्राय नमः ।
३०४ ॐ पुराराතये नमः ।
३०५ ॐ जलन्धरशिरोहराय नमः । । ६१।
३०६ ॐ अन्धकासुरसंहर्त्रे नमः ।
३०७ ॐ भगनेत्रभिदे नमः ।
३०८ ॐ अद्भुताय नमः ।
३०९ ॐ विश्वग्रासाय नमः ।
३१० ॐ अधर्मशत्रवे नमः ।
३११ ॐ ब्रह्मज्ञानैकमन्थराय नमः । । ६२।
३१२ ॐ अग्रेसराय नमः ।
३१३ ॐ तीर्थभूताय नमः ।
३१४ ॐ सितभस्मावकुण्ठनाय नमः ।
३१५ ॐ अकुण्ठमेधसे नमः ।
३१६ ॐ श्रीकण्ठाय नमः ।
३१७ ॐ वैकुण्ठपरमप्रियाय नमः । । ६३।
३१८ ॐ ललाटोज्ज्वलनेत्राब्जाय नमः ।
३१९ ॐ तुषारकरशेखराय नमः ।
३२० ॐ गजासुरशिरश्छेत्रे नमः ।
३२१ ॐ गङ्गोद्भासितमूर्धजाय नमः । । ६४।
३२२ ॐ कल्याणाचलकोदण्डाय नमः ।
३२३ ॐ कमलापतिसायकाय नमः ।
३२४ ॐ वारांशेवधितूणीराय नमः ।
३२५ ॐ सरोजासनसारथये नमः । । ६५।
३२६ ॐ त्रयीतुरङ्गसंक्रान्ताय नमः ।
३२७ ॐ वासुकिज्याविराजिताय नमः ।
३२८ ॐ रवीन्दुचरणाचारिधरारथविराजिताय नमः । । ६६।
३२९ ॐ त्रय्यन्तप्रग्रहोदारचारुघण्टारवोज्ज्वलाय नमः ।
३३० ॐ उत्तानपर्वलोमाढ्याय नमः ।
३३१ ॐ लीलाविजितमन्मथाय नमः । । ६७।
३३२ ॐ जातुप्रपन्नजनताजीवनोपायनोत्सुकाय नमः ।
३३३ ॐ संसारार्णवनिर्मग्नसमुद्धरणपण्डिताय नमः । । ६८।
३३४ ॐ मदद्विरदधिक्कारिगतिमञ्जुलवैभवाय नमः ।
३३५ ॐ मत्तकोकिलमाधुर्यरसनिर्भरगीर्गणाय नमः । । ६९।

३३६ ॐ कैवल्योदधिकल्लोललीलाताण्डवपण्डिताय नमः ।
३३७ ॐ विष्णवे नमः ।
३३८ ॐ जिष्णवे नमः ।
३३९ ॐ वासुदेवाय नमः ।
३४० ॐ प्रभविष्णवे नमः ।
३४१ ॐ पुरातनाय नमः । ।७०।
३४२ ॐ वर्धिष्णवे नमः ।
३४३ ॐ वरदाय नमः ।
३४४ ॐ वैद्याय नमः ।
३४५ ॐ हरये नमः ।
३४६ ॐ नारायणाय नमः ।
३४७ ॐ अच्युताय नमः ।
३४८ ॐ अज्ञानवनदावाग्नये नमः ।
३४९ ॐ प्रज्ञाप्रासादभूपतये नमः । ।७१।
३५० ॐ सर्पभूषितसर्वाङ्गाय नमः ।
३५१ ॐ कर्पूरोज्ज्वलिताकृतये नमः ।
३५२ ॐ अनादिमध्यनिधनाय नमः ।
३५३ ॐ गिरीशाय नमः ।
३५४ ॐ गिरिजापतये नमः । ।७२।
३५५ ॐ वीतरागाय नमः ।
३५६ ॐ विनीताय्मने नमः ।
३५७ ॐ तपस्विने नमः ।
३५८ ॐ भूतभावनाय नमः ।
३५९ ॐ देवासुरगुरुध्येयाय नमः ।
३६० ॐ देवासुरनमस्कृताय नमः । ।७३।
३६१ ॐ देवादिदेवाय नमः ।
३६२ ॐ देवर्षये नमः ।
३६३ ॐ देवासुरवरप्रदायय नमः ।
३६४ ॐ सर्वदेवमयाय नमः ।
३६५ ॐ अचिन्त्याय नमः ।
३६६ ॐ देवात्मने नमः ।
३६७ ॐ आत्मसंभवाय नमः । ।७४।
३६८ ॐ निर्लेपाय नमः ।
३६९ ॐ निष्प्रपञ्चात्मने नमः ।
३७० ॐ निर्विघ्नाय नमः ।
३७१ ॐ विघ्ननाशकाय नमः ।
३७२ ॐ एकज्योतिषे नमः ।
३७३ ॐ निरातङ्काय नमः ।

३७४  ॐ व्याप्तमूर्तये नमः ।
३७५  ॐ अनाकुलाय नमः ।    । ७५।
३७६  ॐ निरवद्यपदोपाधये नमः ।
३७७  ॐ विद्याराशये नमः ।
३७८  ॐ अनुत्तमाय नमः ।
३७९  ॐ नित्यानन्दाय नमः ।
३८०  ॐ सुराध्यक्षाय नमः ।
३८१  ॐ निःसंकल्पाय नमः ।
३८२  ॐ निरञ्जनाय नमः ।    । ७६।
३८३  ॐ निष्कलङ्काय नमः ।
३८४  ॐ निराकाराय नमः ।
३८५  ॐ निष्प्रपञ्चाय नमः ।
३८६  ॐ निरामयाय नमः ।
३८७  ॐ विद्याधराय नमः ।
३८८  ॐ वितत्केशाय नमः ।
३८९  ॐ मार्कण्डेयवरप्रदाय नमः ।    । ७७।
३९०  ॐ भैरवाय नमः ।
३९१  ॐ भैरवीनाथाय नमः ।
३९२  ॐ कामदाय नमः ।
३९३  ॐ कमलासनाय नमः ।
३९४  ॐ वेदवेद्याय नमः ।
३९५  ॐ सुरानन्दाय नमः ।
३९६  ॐ लसज्ज्योतिषे नमः ।
३९७  ॐ प्रभाकराय नमः ।    । ७८।
३९८  ॐ चूडामणये नमः ।
३९९  ॐ सुराधीशाय नमः ।
४००  ॐ यज्ञगेयाय नमः ।
४०१  ॐ हरिप्रियाय नमः ।
४०२  ॐ निर्लेपाय नमः ।
४०३  ॐ नीतिमते नमः ।
४०४  ॐ सूत्रिणे नमः ।
४०५  ॐ श्रीहालाहलसुन्दराय नमः ।    । ७९।
४०६  ॐ धर्मदक्षाय नमः ।
४०७  ॐ महाराजाय नमः ।
४०८  ॐ किरीटिणे नमः ।
४०९  ॐ वन्दिताय नमः ।
४१०  ॐ गुहाय नमः ।
४११  ॐ माधवाय नमः ।

४१२ ॐ यामिनीनाथाय नमः ।
४१३ ॐ शंबराय नमः ।
४१४ ॐ शबरीप्रियाय नमः । ।८०।
४१५ ॐ सङ्गीतवेत्रे नमः ।
४१६ ॐ लोकज्ञाय नमः ।
४१७ ॐ शान्ताय नमः ।
४१८ ॐ कलशसंभवाय नमः ।
४१९ ॐ ब्रह्मण्याय नमः ।
४२० ॐ वरदाय नमः ।
४२१ ॐ नित्याय नमः ।
४२२ ॐ शूलिने नमः ।
४२३ ॐ गुरुवराय हराय नमः । ।८१।
४२४ ॐ मार्ताण्डाय नमः ।
४२५ ॐ पुण्डरीकाक्षाय नमः ।
४२६ ॐ लोकनायकविक्रमाय नमः ।
४२७ ॐ मुकुन्दार्च्याय नमः ।
४२८ ॐ वैद्यनाथाय नमः ।
४२९ ॐ पुरन्दरवरप्रदाय नमः । ।८२।
४३० ॐ भाषाविहीनाय नमः ।
४३१ ॐ भाषाज्ञाय नमः ।
४३२ ॐ विघ्नेशाय नमः ।
४३३ ॐ विघ्ननाशनाय नमः ।
४३४ ॐ किन्नरेशाय नमः ।
४३५ ॐ बृहद्भानवे नमः ।
४३६ ॐ श्रीनिवासाय नमः ।
४३७ ॐ कपालभृते नमः । ।८३।
४३८ ॐ विजयाय नमः ।
४३९ ॐ भूतभावज्ञाय नमः ।
४४० ॐ भीमसेनाय नमः ।
४४१ ॐ दिवाकराय नमः ।
४४२ ॐ बिल्वप्रियाय नमः ।
४४३ ॐ वसिष्ठेशाय नमः ।
४४४ ॐ सर्वमार्गप्रवर्तकाय नमः । ।८४।
४४५ ॐ ओषधीशाय नमः ।
४४६ ॐ वामदेवाय नमः ।
४४७ ॐ गोविन्दाय नमः ।
४४८ ॐ नीललोहिताय नमः ।
४४९ ॐ षदर्धनयनाय नमः ।

४५० ॐ श्रीमन्महादेवाय नमः ।
४५१ ॐ वृषध्वजाय नमः । ।८५।
४५२ ॐ कर्पूरदीपिकालोलाय नमः ।
४५३ ॐ कर्पूररसचर्चिताय नमः ।
४५४ ॐ अव्याजकरुणामूर्तये नमः ।
४५५ ॐ त्यागराजाय नमः ।
४५६ ॐ क्षपाकराय नमः । ।८६।
४५७ ॐ आश्चर्यविग्रहाय नमः ।
४५८ ॐ सूक्ष्माय नमः ।
४५९ ॐ सिद्धेशाय नमः ।
४६० ॐ स्वर्णभैरवाय नमः ।
४६१ ॐ देवराजाय नमः ।
४६२ ॐ कृपासिन्धवे नमः ।
४६३ ॐ अद्वयाय नमः ।
४६४ ॐ अमितविक्रमाय नमः । ।८७।
४६५ ॐ निर्भेदाय नमः ।
४६६ ॐ नित्यसत्त्वस्थाय नमः ।
४६७ ॐ निर्योगक्षेमाय नमः ।
४६८ ॐ आत्मवते नमः ।
४६९ ॐ निरपायाय नमः ।
४७० ॐ निरासङ्गाय नमः ।
४७१ ॐ निःशब्दाय नमः ।
४७२ ॐ निरुपाधिकाय नमः । ।८८।
४७३ ॐ भवाय नमः ।
४७४ ॐ सर्वेश्वराय नमः ।
४७५ ॐ स्वामिने नमः ।
५७६ ॐ भवभीतिविभञ्जनाय नमः ।
४७७ ॐ दारिद्र्यतृणकूटाग्नये नमः ।
४७८ ॐ दारितासुरसन्ततये नमः । ।८९।
४७९ ॐ मुक्तिदाय नमः ।
४८० ॐ मुदिताय नमः ।
४८१ ॐ अकुब्जाय नमः ।
४८२ ॐ धार्मिकाय नमः ।
४८३ ॐ भक्तवत्सलाय नमः ।
४८४ ॐ अभ्यासातिशयज्ञेयाय नमः ।
५८५ ॐ चन्द्रमौलये नमः ।
४८६ ॐ कलाधराय नमः । ।९०।
४८७ ॐ महाबलाय नमः ।

४८८ ॐ महावीर्याय नमः ।
४८९ ॐ विभवे नमः ।
४९० ॐ श्रीशाय नमः ।
४९१ ॐ शुभप्रदाय नमः ।
४९२ ॐ सिद्धाय नमः ।
४९३ ॐ पुराणपुरुषाय नमः ।
४९४ ॐ रणमण्डलभैरवाय नमः । ।९१।
४९५ ॐ सद्योजाताय नमः ।
४९६ ॐ वटारण्यवासिने नमः ।
४९७ ॐ पुरुषवल्लभाय नमः ।
४९८ ॐ हरिकेशाय नमः ।
४९९ ॐ महात्रात्रे नमः ।
५०० ॐ नीलग्रीवाय नमः ।
५०१ ॐ सुमङ्गलाय नमः । ।९२।
५०२ ॐ हिरण्यबाहवे नमः ।
५०३ ॐ तीक्ष्णांशवे नमः ।
५०४ ॐ कामेशाय नमः ।
५०५ ॐ सोमविग्रहाय नमः ।
५०६ ॐ सर्वात्मने नमः ।
५०७ ॐ सर्वकर्त्रे नमः ।
५०८ ॐ ताण्डवाय नमः ।
५०९ ॐ मुण्डमालिकाय नमः । ।९३।
५१० ॐ अग्रगण्याय नमः ।
५११ ॐ सुगंभीराय नमः ।
५१२ ॐ देशिकाय नमः ।
५१३ ॐ वैदिकोत्तमाय नमः ।
५१४ ॐ प्रसन्नदेवाय नमः ।
५१५ ॐ वागीशाय नमः ।
५१६ ॐ चिन्तातिमिरभास्कराय नमः । ।९४।
५१७ ॐ गौरीपतये नमः ।
५१८ ॐ तुङ्गमौलये नमः ।
५१९ ॐ मखराजाय नमः ।
५२० ॐ महाकवये नमः ।
५२१ ॐ श्रीधराय नमः ।
५२२ ॐ सर्वसिद्धेशाय नमः ।
५२३ ॐ विश्वनाथाय नमः ।
५२४ ॐ दयानिधये नमः । ।९५।
५२५ ॐ अन्तर्मुखाय नमः ।

५२६ ॐ बहिर्दृष्टये नमः ।
५२७ ॐ सिद्धवेषमनोहराय नमः ।
५२८ ॐ कृत्तिवाससे नमः ।
५२९ ॐ कृपासिन्धवे नमः ।
५३० ॐ मन्त्रसिद्धाय नमः ।
५३१ ॐ मतिप्रदाय नमः । । ९६।
५३२ ॐ महोत्कृष्टाय नमः ।
५३३ ॐ पुण्यकराय नमः ।
५३४ ॐ जगत्साक्षिणे नमः ।
५३५ ॐ सदाशिवाय नमः ।
५३६ ॐ महाक्रतवे नमः ।
५३७ ॐ महायज्वने नमः ।
५३८ ॐ विश्वकर्मणे नमः ।
५३९ ॐ तपोनिधये नमः । । ९७॥

५४० ॐ छन्दोमयाय नमः ।
५४१ ॐ महाज्ञानिने नमः ।
५४२ ॐ सर्वज्ञाय नमः ।
५४३ ॐ देववन्दिताय नमः ।
५४४ ॐ सार्वभौमाय नमः ।
५४५ ॐ सदानन्दाय नमः ।
५४६ ॐ करुणामृतवारिधये नमः । । ९८।
५४७ ॐ कालकालाय नमः ।
५४८ ॐ कलिध्वंसिने नमः ।
५४९ ॐ जरामरणनाशकाय नमः ।
५५० ॐ शितिकण्ठाय नमः ।
५५१ ॐ चिदानन्दाय नमः ।
५५२ ॐ योगिनीगणसेविताय नमः । । ९९।
५५३ ॐ चण्डीशाय नमः ।
५५४ ॐ शुकसंवेद्याय नमः ।
५५५ ॐ पुण्यश्लोकाय नमः ।
५५६ ॐ दिवस्पतये नमः ।
५५७ ॐ स्थायिने नमः ।
५५८ ॐ सकलतत्त्वात्मने नमः ।
५५९ ॐ सदासेवकवर्धनाय नमः । । १००।
५६० ॐ रोहिताश्वाय नमः ।
५६१ ॐ क्षमारूपिणे नमः ।
५६२ ॐ तप्तचामीकरप्रभाय नमः ।

५६३  ॐ त्रियम्बकाय नमः ।
५६४  ॐ वररुचये नमः ।
५६५  ॐ देवदेवाय नमः ।
५६६  ॐ चतुर्भुजाय नमः ।    । १०१।
५६७  ॐ विश्वम्भराय नमः ।
५६८  ॐ विचित्राङ्गाय नमः ।
५६९  ॐ विधात्रे नमः ।
५७०  ॐ पुरुशासनाय नमः ।
५७१  ॐ सुब्रह्मण्याय नमः ।
५७२  ॐ जगत्स्वामिने नमः ।
५७३  ॐ रोहिताक्षाय नमः ।
५७४  ॐ शिवोत्तमाय नमः ।    । १०२।
५७५  ॐ नक्षत्रमालाभरणाय नमः ।
५७६  ॐ मघवते नमः ।
५७७  ॐ अघनाशनाय नमः ।
५७८  ॐ विधिकर्त्रे नमः ।
५७९  ॐ विधानज्ञाय नमः ।
५८०  ॐ प्रधानपुरुषेश्वराय नमः ।    । १०३।
५८१  ॐ चिन्तामणये नमः ।
५८२  ॐ सुरगुरवे नमः ।
५८३  ॐ ध्येयाय नमः ।
५८४  ॐ नीराजनप्रियाय नमः ।
५८५  ॐ गोविन्दाय नमः ।
५८६  ॐ राजराजेशाय नमः ।
५८७  ॐ बहुपुष्पार्चनप्रियाय नमः ।    । १०४।
५८८  ॐ सर्वानन्दाय नमः ।
५८९  ॐ दयारूपिणे नमः ।
५९०  ॐ शैलजासुमनोहराय नमः ।
५९१  ॐ सुविक्रमाय नमः ।
५९२  ॐ सर्वगताय नमः ।
५९३  ॐ हेतुसाधनवर्जिताय नमः ।    । १०५।
५९४  ॐ वृषाङ्काय नमः ।
५९५  ॐ रमणीयाङ्गाय नमः ।
५९६  ॐ सदङ्घ्रये नमः ।
]५९७  ॐ सामपारगाय नमः ।
५९८  ॐ मन्त्रात्मने नमः ।
५९९  ॐ कोटिकन्दर्पसौन्दर्यरसवारिधये नमः ।   । १०६।
६००  ॐ यज्ञेशाय नमः ।

६०१ ॐ यज्ञपुरुषाय नमः ।
६०२ ॐ सृष्टिस्थित्यन्तकारणाय नमः ।
६०३ ॐ परहंसैकजिज्ञास्याय नमः ।
६०४ ॐ स्वप्रकाशस्वरूपवते नमः । ।१०७।
६०५ ॐ मुनिमृग्याय नमः ।
६०६ ॐ देवमृग्याय नमः ।
६०७ ॐ मृगहस्ताय नमः ।
६०८ ॐ मृगेश्वराय नमः ।
६०९ ॐ मृगेन्द्रचर्मवसनाय नमः ।
६१० ॐ नरसिंहनिपातनाय नमः । ।१०८।
६११ ॐ मुनिवन्द्याय नमः ।
६१२ ॐ मुनिश्रेष्ठाय नमः ।
६१३ ॐ मुनिबृन्दनिषेविताय नमः ।
६१४ ॐ दुष्टमृत्यवे नमः ।
६१५ ॐ अदुष्टेहाय नमः ।
६१५ ॐ मृत्युघ्ने नमः ।
६१७ ॐ मृत्युपूजिताय नमः । ।१०९।
६१८ ॐ अव्यक्ताय नमः ।
६१९ ॐ अम्बुजजन्मादिकोटिकोटिसुपूजिताय नमः ।
६२० ॐ लिङ्गमूर्तये नमः ।
६२१ ॐ अलिङ्गात्मने नमः ।
६२२ ॐ लिङ्गात्मने नमः ।
६२३ ॐ लिङ्गविग्रहाय नमः । ।११०।
६२४ ॐ यजुर्मूर्तये नमः ।
६२५ ॐ साममूर्तये नमः ।
६२६ ॐ ऋङ्मूर्तये नमः ।
६२७ ॐ मूर्तिवर्जिताय नमः ।
६२८ ॐ विश्वेशाय नमः ।
६२९ ॐ गजचर्मैकचेलाञ्चितकटीतटाय नमः । ।१११।
६३० ॐ पावनान्तेवसद्योगिजनसार्थसुधाकराय नमः ।
६३१ ॐ अनन्तसोमसूर्याग्निमण्डलप्रतिमप्रभाय नमः । ।११२।
६३२ ॐ चिन्ताशोकप्रशमनाय नमः ।
६३३ ॐ सर्वविद्याविशारदाय नमः ।
६३४ ॐ भक्तविज्ञप्तिसंधात्रे नमः ।
६३५ ॐ कर्त्रे नमः ।
६३६ ॐ गिरिवराकृतये नमः । । ११३।
६३७ ॐ ज्ञानप्रदाय नमः ।
६३८ ॐ मनोवासाय नमः ।

६३९  ॐ क्षेम्याय नमः ।
६४०  ॐ मोहविनाशनाय नमः ।
६४१  ॐ सुरोत्तमाय नमः ।
६४२  ॐ चित्रभानवे नमः ।
६४३  ॐ सदावैभवतत्पराय नमः ।    ।११४।
६४४  ॐ सुहृदग्रेसराय नमः ।
६४५  ॐ सिद्धज्ञानमुद्राय नमः ।
६४६  ॐ गणाधिपाय नमः ।
६४७  ॐ आगमाय नमः ।
६४८  ॐ चर्मवसनाय नमः ।
६४९  ॐ वाञ्छितार्थफलप्रदाय नमः ।    ।११५।
६५०  ॐ अन्तर्हिताय नमः ।
६५१  ॐ असमानाय नमः ।
६५२  ॐ देवसिंहासनाधिपाय नमः ।
६५३  ॐ विवादहन्त्रे नमः ।
६५४  ॐ सर्वात्मने नमः ।
६५५  ॐ कालाय नमः ।
६५६  ॐ कालविवर्जिताय नमः ।    ।११६।
६५७  ॐ विश्वातीताय नमः ।
६५८  ॐ विश्वकर्त्रे नमः ।
६५९  ॐ विश्वेशाय नमः ।
६६०  ॐ विश्वकारणाय नमः ।
६६१  ॐ योगिध्येयाय नमः ।
६६२  ॐ योगनिष्ठाय नमः ।
६६३  ॐ योगात्मने नमः ।
६६४  ॐ योगवित्तमाय नमः ।    ।११७।
६६५  ॐ ओंकाररूपाय नमः ।
६६६  ॐ भगवते नमः ।
६६७  ॐ बिन्दुनादमयाय शिवाय नमः ।
६६८  ॐ चतुर्मुखादिसंस्तुताय नमः ।
६६९  ॐ चतुर्वर्गफलप्रदाय नमः ।    ।११८।
६७०  ॐ सह्याचलगुहावासिने नमः ।
६७१  ॐ साक्षान्मोक्षरसामृताय नमः ।
६७२  ॐ दक्षाध्वरसमुच्छेत्रे नमः ।
६७३  ॐ पक्षपातविवर्जिताय नमः ।    ।११९
६७४  ॐ ओंकारवाचकाय नमः ।
६७५  ॐ शंभवे नमः ।
६७६  ॐ शङ्कराय नमः ।

६७७ ॐ शशिशीतलाय नमः ।
६७८ ॐ पङ्कजासनसंसेव्याय नमः ।
६७९ ॐ किङ्करामरवत्सलाय नमः । ।१२०।
६८० ॐ नतदौर्भाग्यतूलाग्नये नमः ।
६८१ ॐ कृतकौतुकमङ्गलाय नमः ।
६८२ ॐ त्रिलोकमोहनाय नमः ।
६८३ ॐ श्रीमत्त्रिपुण्ड्राङ्कितमस्तकाय नमः । ।१२१।
६८४ ॐ क्रौञ्चारिजनकाय नमः ।
६८५ ॐ श्रीमद्गणनाथसुतान्विताय नमः ।
६८६ ॐ अद्भुतानन्तवरदाय नमः ।
६८७ ॐ अपरिच्छिन्नात्मवैभवाय नमः । ।१२२।
६८८ ॐ इष्टापूर्तप्रियाय नमः ।
६८९ ॐ शर्वाय नमः ।
६९० ॐ एकवीराय नमः ।
६९१ ॐ प्रियंवदाय नमः ।
६९२ ॐ ऊहापोहविनिर्मुक्ताय नमः ।
६९३ ॐ ओंकारेश्वरपूजिताय नमः । ।१२३।
६९४ ॐ रुद्राक्षवक्षसे नमः ।
६९५ ॐ रुद्राक्षरूपाय नमः ।
६९६ ॐ रुद्राक्षपक्षकाय नमः ।
६९७ ॐ भुजगेन्द्रलसत्कण्ठाय नमः ।
६९८ ॐ भुजङ्गाभरणप्रियाय नमः । ।१२४।
६९९ ॐ कल्याणरूपाय नमः ।
७०० ॐ कल्याणाय नमः ।
७०१ ॐ कल्याणगुणसंश्रयाय नमः ।
७०२ ॐ सुन्दरभ्रुवे नमः ।
७०३ ॐ सुनयनाय नमः ।
७०४ ॐ सुललाटाय नमः ।
७०५ ॐ सुकन्धराय नमः । ।१२५।
७०६ ॐ विद्वज्जनाश्रयाय नमः ।
७०७ ॐ विद्वज्जनस्तव्यपराक्रमाय नमः ।
७०८ ॐ विनीतवत्सलाय नमः ।
७०९ ॐ नीतिस्वरूपाय नमः ।
७१० ॐ नीतिसंश्रयाय नमः । ।१२६।
७११ ॐ अतिरागिणे नमः ।
७१२ ॐ वीतरागिणे नमः ।
७१३ ॐ रागहेतवे नमः ।
७१४ ॐ विरागविदे नमः ।

७१५ ॐ रागघ्ने नमः ।
७१६ ॐ रागशमनाय नमः ।
७१७ ॐ रागदाय नमः ।
७१८ ॐ रागिरागविदे नमः । ।१२७।
७१९ ॐ मनोन्मनाय नमः ।
७२० ॐ मनोरूपाय नमः ।
७२१ ॐ बलप्रमथनाय नमः ।
७२२ ॐ बलाय नमः ।
७२३ ॐ विद्याकराय नमः ।
७२४ ॐ महाविद्याय नमः ।
७२५ ॐ विद्याविद्याविशारदाय नमः । ।१२८।
७२६ ॐ वसन्तकृते नमः ।
७२७ ॐ वसन्तात्मने नमः ।
७२८ ॐ वसन्तेशाय नमः ।
७२९ ॐ वसन्तदाय नमः ।
७३० ॐ प्रावृट्कृते नमः ।
७३१ ॐ प्रावृडाकाराय नमः ।
७३२ ॐ प्रावृट्कालप्रवर्तकाय नमः । ।१२९।
७३३ ॐ शरन्नाथाय नमः ।
७३४ ॐ शरत्कालनाशकाय नमः ।
७३५ ॐ शरदाश्रयाय नमः ।
७३६ ॐ कुन्दमन्दारपुष्पौघलसद्वायुनिषेविताय नमः । ।१३०।
७३७ ॐ दिव्यदेहप्रभाकूटसंदीपितदिगन्तराय नमः ।
७३८ ॐ देवासुरगुरुस्तव्याय नमः ।
७३९ ॐ देवासुरनमस्कृताय नमः । ।१३१।
७४० ॐ वामाङ्गभागविलसच्छ्यामलावीक्षणप्रियाय नमः ।
७४१ ॐ कीर्त्याधाराय नमः ।
७४२ ॐ कीर्तिकराय नमः ।
७४३ ॐ कीर्तिहेतवे नमः ।
७४४ ॐ अहेतुकाय नमः । ।१३२।
७४५ ॐ शरणागतदीनार्तपरित्राणपरायणाय नमः ।
७४६ ॐ महाप्रेतासनासीनाय नमः ।
७४७ ॐ जितसर्वपितामहाय नमः । ।१३३।
७४८ ॐ मुक्तादामपरीताङ्गाय नमः ।
७४९ ॐ नानागानविशारदाय नमः ।
७५० ॐ विष्णुब्रह्मादिवन्द्याङ्घ्रये नमः ।
७५१ ॐ नानादेशैकनायकाय नमः । ।१३४।
७५२ ॐ धीरोदात्ताय नमः ।

७५३ ॐ महाधीराय नमः ।
७५४ ॐ धैर्यदाय नमः ।
७५५ ॐ धैर्यवर्धकाय नमः ।
७५६ ॐ विज्ञानमयाय नमः ।
७५७ ॐ आनन्दमयाय नमः ।
७५८ ॐ प्राणमयाय नमः ।
७५९ ॐ अन्नदाय नमः । ।१३५।
७६० ॐ भवाब्धितरणोपायाय नमः ।
७६१ ॐ कवये नमः ।
७६२ ॐ दुःस्वप्ननाशनाय नमः ।
७६३ ॐ गौरीविलाससदनाय नमः ।
७६४ ॐ पिशाचानुसरावृताय नमः । ।१३६।
७६५ ॐ दक्षिणाप्रेमसंतुष्टाय नमः ।
७६६ ॐ दारिद्र्यवडवानलाय नमः ।
७६७ ॐ अद्भुतानन्तसंग्रामाय नमः ।
७६८ ॐ ढक्कावादनतत्पराय नमः । ।१३७।
७६९ ॐ प्राच्यात्मने नमः ।
७७० ॐ दक्षिणाकाराय नमः ।
७७१ ॐ प्रतीच्यात्मने नमः ।
७७२ ॐ उत्तराकृतये नमः ।
७७३ ॐ ऊर्ध्वाद्यन्यदिगाकाराय नमः ।
७७४ ॐ मर्मज्ञाय नमः ।
७७५ ॐ सर्वशिक्षकाय नमः । ।१३८।
७७६ ॐ युगावहाय नमः ।
७७७ ॐ युगाधीशाय नमः ।
७७८ ॐ युगात्मने नमः ।
७७९ ॐ युगनायकाय नमः ।
७८० ॐ जङ्गमाय नमः ।
७८१ ॐ स्थावराकाराय नमः ।
७८२ ॐ कैलासशिखरप्रियाय नमः । ।१३९।
७८३ ॐ हस्तराजत्पुण्डरीकाय नमः ।
७८४ ॐ पुण्डरीकनिभेक्षणाय नमः ।
७८५ ॐ लीलाविडंबितवपुषे नमः ।
७८६ ॐ भक्तमानसमण्डिताय नमः । ।१४०।
७८७ ॐ बृन्दारकप्रियतमाय नमः ।
७८८ ॐ बृन्दारकवरार्चिताय नमः ।
७८९ ॐ नानाविधानेकरत्नलसत्कुण्डलमण्डिताय नमः । ।१४१।
७९० ॐ निःसीममहिम्ने नमः ।

७९१  ॐ नित्यलीलाविग्रहरूपधृते नमः ।
७९२  ॐ चन्दनद्रवदिग्धाङ्गाय नमः ।
७९३  ॐ चाम्पेयकुसुमार्चिताय नमः ।   ।१४२।
७९४  ॐ समस्तभक्तसुखदाय नमः ।
७९५  ॐ परमाणवे नमः ।
७९६  ॐ महाह्रदाय नमः ।
७९७  ॐ अलौकिकाय नमः ।
७९८  ॐ दुष्प्रधर्षाय नमः ।
७९९  ॐ कपिलाय नमः ।
८००  ॐ कालकन्धराय नमः ।   ।१४३।
८०१  ॐ कर्पूरगौराय नमः ।
८०२  ॐ कुशलाय नमः ।
८०३  ॐ सत्यसन्धाय नमः ।
८०४  ॐ जितेन्द्रियाय नमः ।
८०५  ॐ शाश्वतैश्वर्यविभवाय नमः ।
८०६  ॐ पोषकाय नमः ।
८०७  ॐ सुसमाहिताय नमः ।   ।१४४।
८०८  ॐ महर्षिनाथिताय नमः ।
८०९  ॐ ब्रह्मयोनये नमः ।
८१०  ॐ सर्वोत्तमोत्तमाय नमः ।
८११  ॐ भूमिभारार्तिसंहर्त्रे नमः ।
८१२  ॐ षडूर्मिरहिताय नमः ।
८१३  ॐ मृडाय नमः ।   ।१४५।
८१४  ॐ त्रिविष्टपेश्वराय नमः ।
८१५  ॐ सर्वहृदयाम्बुजमध्यगाय नमः ।
८१६  ॐ सहस्रदलपद्मस्थाय नमः ।
८१७  ॐ सर्ववर्णोपशोभिताय नमः ।   ।१४६।
८१८  ॐ पुण्यमूर्तये नमः ।
८१९  ॐ पुण्यलभ्याय नमः ।
८२०  ॐ पुण्यश्रवणकीर्तनाय नमः ।
८२१  ॐ सूर्यमण्डलमध्यस्थाय नमः ।
८२२  ॐ चन्द्रमण्डलमध्यगाय नमः ।   ।१४७।
८२३  ॐ सद्भक्तध्याननिगलाय नमः ।
८३४  ॐ शरणागतपालकाय नमः ।
८२५  ॐ श्वेतातपत्ररुचिराय नमः ।
८२६  ॐ श्वेतचामरवीजिताय नमः ।   ।१४८।
८२७  ॐ सर्वावयवसम्पूर्णाय नमः ।
८२८  ॐ सर्वलक्षणलक्षिताय नमः ।

८२९ ॐ सर्वमङ्गलमाङ्गल्याय नमः ।
८३० ॐ सर्वकारणकारणाय नमः । ।१४९।
८३१ ॐ आमोदाय नमः ।
८३२ ॐ मोदजनकाय नमः ।
८३३ ॐ सर्पराजोत्तरीयकाय नमः ।
८३४ ॐ कपालिने नमः ।
८३५ ॐ कोविदाय नमः ।
८३६ ॐ सिद्धकान्तिसंवलिताननाय नमः । ।१५०।
८३७ ॐ सर्वसद्गुरुसंसेव्याय नमः ।
८३८ ॐ दिव्यचन्दनचर्चिताय नमः ।
८३९ ॐ विलासिनीकृतोल्लासाय नमः ।
८४० ॐ इच्छाशक्तिनिषेविताय नमः । ।१५१।
८४१ ॐ अनन्तानन्दसुखदाय नमः ।
८४२ ॐ नन्दनाय नमः ।
८४३ ॐ श्रीनिकेतनाय नमः ।
८४४ ॐ अमृताब्धिकृतावासाय नमः ।
८४५ ॐ नित्यक्लीबाय नमः ।
८४६ ॐ निरामयाय नमः । ।१५२।
८४७ ॐ अनपायाय नमः ।
८४८ ॐ अनन्तदृष्टये नमः ।
८४९ ॐ अप्रमेयाय नमः ।
८५० ॐ अजराय नमः ।
८५१ ॐ अमराय नमः ।
८५२ ॐ तमोमोहप्रतिहतये नमः ।
८५३ ॐ अप्रतर्क्याय नमः ।
८५४ ॐ अमृताय नमः ।
८५५ ॐ अक्षराय नमः । ।१५३।
८५६ ॐ अमोघबुद्धये नमः ।
८५७ ॐ आधाराय नमः ।
८५८ ॐ आधाराधेयवर्जिताय नमः ।
८५९ ॐ ईषणात्रयनिर्मुक्ताय नमः ।
८६० ॐ इहामुत्रविवर्जिताय नमः । ।१५४।
८६१ ॐ ऋग्यजुःसामनयनाय नमः ।
८६२ ॐ बुद्धिसिद्धिसमृद्धिदाय नमः ।
८६३ ॐ औदार्यनिधये नमः ।
८६४ ॐ आपूर्णाय नमः ।
८६५ ॐ ऐहिकामुष्मिकप्रदाय नमः । ।१५५।
८६६ ॐ शुद्धसन्मात्रसंविद्धी-स्वरूपसुखविग्रहाय नमः ।

८६७ ॐ दर्शनप्रथमाभासाय नमः ।
८६८ ॐ दृष्टिदृश्यविवर्जिताय नमः । ।१५६।
८६९ ॐ अग्रगण्याय नमः ।
८७० ॐ अचिन्त्यरूपाय नमः ।
८७१ ॐ कलिकल्मषनाशनाय नमः ।
८७२ ॐ विमर्शरूपाय नमः ।
८७३ ॐ विमलाय नमः ।
८७४ ॐ नित्यरूपाय नमः ।
८७५ ॐ निराश्रयाय नमः । ।१५७।
८७६ ॐ नित्यशुद्धाय नमः ।
८७७ ॐ नित्यबुद्धाय नमः ।
८७८ ॐ नित्यमुक्ताय नमः ।
८७९ ॐ अपराकृताय नमः ।
८८० ॐ मैत्र्यादिवासनालभ्याय नमः ।
८८१ ॐ महाप्रलयसंस्थिताय नमः । ।१५८।
८८२ ॐ महाकैलासनिलयाय नमः ।
८८३ ॐ प्रज्ञानघनविग्रहाय नमः ।
८८४ ॐ श्रीमते नमः ।
८८५ ॐ व्याघ्रपुरावासाय नमः ।
८८६ ॐ भुक्तिमुक्तिप्रदायकाय नमः । ।१५९।
८८७ ॐ जगद्योनये नमः ।
८८८ ॐ जगत्साक्षिणे नमः ।
८८९ ॐ जगदीशाय नमः ।
८९० ॐ जगन्मयाय नमः ।
८९१ ॐ जपाय नमः ।
८९२ ॐ जपपराय नमः ।
८९३ ॐ जप्याय नमः ।
८९४ ॐ विद्यासिंहासनप्रभवे नमः । ।१६०।
८९५ ॐ तत्त्वानां प्रकृतये नमः ।
८९६ ॐ तत्त्वाय नमः ।
८९७ ॐ तत्त्वंपदनिरूपिताय नमः ।
८९८ ॐ दिक्कालाद्यनवच्छिन्नाय नमः ।
८९९ ॐ सहजानन्दसागराय नमः । ।१६१।
९०० ॐ प्रकृतये नमः ।
९०१ ॐ प्राकृतातीताय नमः ।
९०२ ॐ विज्ञानैकरसाकृतये नमः ।
९०३ ॐ निःशङ्कमतिदूरस्थाय नमः ।
९०४ ॐ चैत्यचेतनचिन्तनाय नमः । ।१६२।

९०५ ॐ तारकाणां हृदन्तस्थाय नमः ।
९०६ ॐ तारकाय नमः ।
९०७ ॐ तारकान्तकाय नमः ।
९०८ ॐ ध्यानैकप्रकटाय नमः ।
९०९ ॐ ध्येयाय नमः ।
९१० ॐ ध्यानिने नमः ।
९११ ॐ ध्यानविभूषणाय नमः । । १६३।
९१२ ॐ परस्मै व्योम्ने नमः ।
९१३ ॐ परस्मै धाम्ने नमः ।
९१४ ॐ परमात्मने नमः ।
९१५ ॐ परस्मै पदाय नमः ।
९१६ ॐ पूर्णानन्दाय नमः ।
९१७ ॐ सदानन्दाय नमः ।
९१८ ॐ नादमध्यप्रतिष्ठिताय नमः । । १६४।
९१९ ॐ प्रभाविपर्ययातीताय नमः ।
९२० ॐ प्रणताज्ञाननाशकाय नमः ।
९२१ ॐ बाणार्चिताङ्घ्रये नमः ।
९२२ ॐ बहुदाय नमः ।
९२३ ॐ बालकेलिकुतूहलिने नमः । । १६५।
९२४ ॐ ब्रह्मरूपिणे नमः ।
९२५ ॐ ब्रह्मपदाय नमः ।
९२६ ॐ ब्रह्मविदे नमः ।
९२७ ॐ ब्राह्मणप्रियाय नमः ।
९२८ ॐ भ्रूक्षेपदत्तलक्ष्मीकाय नमः ।
९२९ ॐ भ्रूमध्यध्यानलक्षिताय नमः । । १६६।
९३० ॐ यशस्कराय नमः ।
९३१ ॐ रत्नगर्भाय नमः ।
९३२ ॐ महाराज्यसुखप्रदाय नमः ।
९३३ ॐ शब्दब्रह्मणे नमः ।
९३४ ॐ शमप्राप्याय नमः ।
९३५ ॐ लाभकृते नमः ।
९३६ ॐ लोकविश्रुताय नमः । । १६७।
९३७ ॐ शास्त्रे नमः ।
९२८ ॐ शिवाद्रिनिलयाय नमः ।
९३९ ॐ शरण्याय नमः ।
९४० ॐ याजकप्रियाय नमः ।
९४१ ॐ संसारवैद्याय नमः ।
९४२ ॐ सर्वज्ञाय नमः ।

९४३ ॐ सभेषजविभेषजाय नमः । । १६८।
९४४ ॐ मनोवचोभिरग्राह्याय नमः ।
९४५ ॐ पञ्चकोशविलक्षणाय नमः ।
९४६ ॐ अवस्थात्रयनिर्मुक्ताय नमः ।
९४७ ॐ अवस्थासाक्षितुर्यकाय नमः । । १६९।
९४८ ॐ पञ्चभूतादिदूरस्थाय नमः ।
९४९ ॐ प्रत्यगेकरसाय नमः ।
९५० ॐ अव्ययाय नमः ।
९५१ ॐ षट्चक्रान्तर्गतोल्लासिने नमः ।
९५२ ॐ षड्विकारविवर्जिताय नमः । । १७०।
९५३ ॐ विज्ञानघनसम्पूर्णाय नमः ।
९५४ ॐ वीणावादनतत्पराय नमः ।
९५५ ॐ नीहाराकारगौराङ्गाय नमः ।
९५६ ॐ महालावण्यवारिधये नमः । । १७१।
९५७ ॐ पराभिचारशमनाय नमः ।
९५८ ॐ षडध्वोपरिसंस्थिताय नमः ।
९५९ ॐ सुषुम्नामार्गसंचारिणे नमः ।
९६० ॐ बिसतन्तुनिभाकृतये नमः । । १७२।
९६१ ॐ पिनाकिने नमः ।
९६२ ॐ लिङ्गरूपश्रिये नमः ।
९६३ ॐ मङ्गलावयवोज्ज्वलाय नमः ।
९६४ ॐ क्षेत्राधिपाय नमः ।
९६५ ॐ सुसंवेद्याय नमः ।
९६६ ॐ श्रीप्रदाय नमः ।
९६७ ॐ विभवप्रदाय नमः । । १७३।
९६८ ॐ सर्ववश्यकराय नमः ।
९६९ ॐ सर्वदोषघ्ने नमः ।
९७० ॐ पुत्रपौत्रदाय नमः ।
९७१ ॐ तैलदीपप्रियाय नमः ।
९७२ ॐ तैलपक्वान्नप्रीतमानसाय नमः । । १७४।
९७३ ॐ तैलाभिषेकसंतुष्टाय नमः ।
९७४ ॐ तिलभक्षणतत्पराय नमः ।
९७५ ॐ आपादकणिकामुक्ताभूषाशतमनोहराय नमः । । १७५।
९७६ ॐ शाणोल्लीढमणिश्रेणीरम्याङ्घ्रिनखमण्डलाय नमः ।
९७७ ॐ मणिमञ्जीरकिरणकिञ्जल्कितपदाम्बुजाय नमः । । १७६।
९७८ ॐ अपस्मारोपरिन्यस्तसव्यपादसरोरुहाय नमः ।
९७९ ॐ कन्दर्पतूणाभजङ्घाय नमः ।
९८० ॐ गुल्फोदञ्चितनूपुराय नमः । । १७७।

९८१ ॐ करिहस्तोपमेयोरवे नमः ।
९८२ ॐ आदर्शोज्ज्वलजानुभृते नमः ।
९८३ ॐ विशंकटकटिन्यस्तवाचालमणिमेखलाय नमः । ।१७८।
९८४ ॐ आवर्तनाभिरोमालिवलिमत्पल्लवोदराय नमः ।
९८५ ॐ मुक्ताहारलसत्तुङ्गविपुलोरस्करञ्जिताय नमः । ।१७९।
९८६ ॐ वीरासनसमासीनाय नमः ।
९८७ ॐ वीणापुस्तोल्लसत्कराय नमः ।
९८८ ॐ अक्षमालालसत्पाणये नमः ।
९८९ ॐ चिन्मुद्रितकरांबुजाय नमः । ।१८०।
९९० ॐ माणिक्यकङ्कणोल्लासिकराम्बुजविराजिताय नमः ।
९९१ ॐ अनर्घरत्नग्रैवेयविलसत्कंबुकन्धराय नमः । ।१८१।
९९२ ॐ अनाकलितसादृश्यचुबुकश्रीविराजिताय नमः ।
९९३ ॐ मुग्धस्मितपरीपाकप्रकाशितरदाङ्कुराय नमः । ।१८२।
९९४ ॐ चारुचांपेयपुष्पाभनासिकापुटरञ्जिताय नमः ।
९९५ ॐ वरवज्रशिलादर्शपरिभाविकपोलभुवे नमः । ।१८३।
९९६ ॐ कर्णद्वयोल्लसद्दिव्यमणिकुण्डलमण्डिताय नमः ।
९९७ ॐ करुणालहरीपूर्णकर्णान्तायतलोचनाय नमः । ।१८४।
९९८ ॐ अर्धचन्द्राभनिटिलपाटीरतिलकोज्ज्वलाय नमः ।
९९९ ॐ चारुचामीकराकारजटाचर्चितचन्दनाय नमः ।
१००० ॐ ओं कैलासशिखरस्फर्धिकमनीयनिजाकृतये नमः । ।१८५।

॥ इति श्री दक्षिणामूर्ति सहस्रनामावलिः समाप्ता ॥

॥ ओं तत् सत् ॥